वारुणेर्ऽभिपक्वपण्यशौण्डिकानां जयप्रदः ॥ २२ ॥
अजैकपादिदृष्टिघ्नः श्लेष्मिकानापिपोषयेत् ।
अहिर्बुध्न्येहिरण्यस्त्रीयोधानामभिवृद्धिदः ॥ २३ ॥
पौष्णेहन्तिशरत्सस्यमीश्वरान् यवनानपि ।
सर्व्वत्रविमलन्निग्धश्चारवाशातिदोषकृत् ॥ २४ ॥
जीवोयदाविशाखास्थः कृत्तिकास्थः शनैश्चरः ।
तदामजानामनयः पौरभेदश्च निश्चितः ॥ २५ ॥
आवौक्षितौच शुक्रौच सदाभिःभौमशनैश्चरौ ।
एकत्रसङ्गतौस्यातामनिलानलभीतिदौ ॥ २६ ॥
उद्गताः दस्युवाराश्च पशुवित्तविनाशकृत् ।
जनोबन्धुवियोगार्त्तः पीड्यते बहुभूसपः ॥ २७ ॥
अतिवृष्ट्या क्वचित् सस्यमवृष्ट्यानश्यति क्वचित् ।
लोकः पीड्यति रोगेण समये सूर्य्यजन्मिनः ॥ २८ ॥

इति वर्षाधिपफलम् ।



अथवोन्यमयूपाश्च नीचगानीक्षिताग्रहाः ।
फलं नयन्त्यदग्धर्पयाभिहितात्मनः ॥ २९ ॥
शुभाशुभानां वर्षादि भवेद् गम्भीरिवं यदा ।
तदापि फलमन्वेष्य [illegible] निर्दिश्यते ॥ ३० ॥
[illegible] ।
[illegible] ॥
[illegible] ।
[illegible] ॥ ३१ ॥
[illegible] ।
[illegible] ॥ ३२ ॥

वैदूर्य्यकान्तिविमलः शुभदः प्रजानां ।
बाणातसीकुसुमवर्णनिभः प्रशस्त. ।
यञ्चापि वर्णमुपगच्छति तत्सवर्ण
सूर्य्यात्मजः क्षपयतीति मुनिप्रवादः ॥ ३३ ॥
इति शनैश्चरचरितं नामाष्टमोऽध्यायः ।

---

## नवमोऽध्यायः ।

---

अथराहोश्चरितं समासेन प्रकाश्यते ।
अर्थः फलमप्युष्य स्यात् प्रमाणं क्षयतीर्थकः ॥ १ ॥
ऋणयाब्दे विलिप्तानां मधुको भागहारकः ।
ऋक्षी मण्डलं सकृत्वा स्फुटमेतस्य निर्दिशेत् ॥ २ ॥
मण्डलार्द्धमिहक्षिप्त्वास्फुटं केतोश्च साधयेत् ।
मद्ध्येप्वर्केन्दुतुङ्गानां तमसश्च स्फुटं क्रमात् ॥ ३ ॥
सोपञ्च प्रवलं छायास्पधाराञ्जनं सजेत् ।
अथ वा बीजकर्मैव पूर्व्वोक्तम्फलमिष्यते ॥ ४ ॥
अमावस्यादिवापर्व्वपरिच्छेदः समीपगः ।
अङ्गत्रयमिदं दृष्ट्वा रविग्रामं विचिन्तयेत् ॥ ५ ॥
भानुनेन्दु कलीकृत्य पूर्व्ववत् पर्व्व साधयेत् ।
अवशेषं परिज्ञाय ततो लिप्ताद्यमाहरेत् ॥ ६ ॥
प्रतिपत्पर्व्वणोरन्यतरमम्बन्धिनद्भवेत् ।
ततो गोक्षुण्णतो नाभिप्रासमन्तरलिप्तिका ॥ ७ ॥
प्रथमान्तरलिप्तादि शोधयेद्भास्करस्फुटात् ।
एतञ्च तिथिशेषञ्च शशिनस्तु विशोधयेत् ॥ ८ ॥

पर्व्वस्योत्तरलिप्तादि योजयेद् द्वादशात्मनि ।
निशाकरेतु तदिदं तिथिशेषञ्च योजयेत् ॥ ९ ॥
सूर्य्यचन्द्रमसोश्चैवं समो नाम भविष्यति ।
अथेचैवं क्रियाभिज्ञस्तमकर्म्म समाचरेत् ॥ १० ॥
चन्द्रस्फुटो यदि महान् योगोस्यउदाहृतः ।
स्फुटो यदि महान् भानोर्विद्याद्योगमनागतम् ॥ ११ ॥
एतयोः स्फुटभोगाभ्यान्तिथिशेषं पृथक् पृथक् ।
अभ्यस्य वित्तरेन्यस्ता विलिप्ता स्फुटयो स्तयोः ॥ १२ ॥
संयोजयेच्चतुर्दश्यां पञ्चदश्यान्तु शोधयेत् ।
सदृशावर्कशशिनौ शतमेवं कृते सति ॥ १३ ॥
स्फुटभुक्तिं सहस्रांशोश्चापेनाहृत्य कातरैः ।
भाजयेल्लिप्तिकाद्यं तद्भानोर्विम्बदलम्भवेत् ॥ १४ ॥
दिनाभ्यस्तं सुधाधाम स्फुटभोगं रसास्थिकैः ।
आहृत्य घटिकाद्यन्तादिन्दोर्विम्बार्द्धमादिशेत् ॥ १५ ॥
संयुक्तमतयोरर्द्धसंयोगार्द्धमिति स्मृतम् ।
अथकालविशुद्धयर्थं लम्बपर्व्व विधीयते ॥ १६ ॥
पूर्व्वाह्णे पर्व्वनाच्छेदे दिनार्धात्पर्व्व शोधयेत् ।
पर्व्वच्छेदे पराह्णे चेदिनार्द्धं पर्व्वणस्त्यजेत् ॥ १७ ॥
शेषन्तु विकलीकृत्य घनैर्हित्वा नवहृते ।
प्राप्तं लिप्तादि तत्रापि नीचलम्बास्तु तारकाः ॥ १८ ॥
पादः समश्चेद्विषमं त्यक्त्वा शेषं कलीकृतम् ।
विभज्य शम्भुना लब्धं लम्बनज्यागुणो भवेत् ॥ १९ ॥
मृगो नागो वरं शय्या नीपस्त्रीणोपुनर्ननु ।
ज्ञानञ्चेति नवैते तु मण्डलम्बगुणाःस्मृताः ॥ २० ॥
लब्धज्यां पूर्व्वापरयोः शेषञ्चान्त्यगुणाद् हृते ।

शम्भुनाप्तं क्षिपेन्मूर्ध्नि स्यादेतल्लम्बनं फलम् ॥ २१ ॥
ततो नागाप्तलिप्ताद्यं क्रमात्पूर्व्वापराह्णयोः ।
पर्व्वनाड्याग्रणं देयं शुद्धलम्बनपर्व्व तत् ॥ २२ ॥
मायोभ्यस्तं लम्बफलं पुनर्लम्बफलैर्युतम् ।
अनघेनाप्तलिप्तादि शुद्धलम्बकलादिकम् ॥ २३ ॥
पूर्व्वाह्णे पर्व्वनाच्छेदे ततश्चार्कादू विशोधयेत् ।
सायाह्ने योजयेत् सोयं लम्बनादिस उच्यते ॥ २४ ॥
राहुं लम्बाद्रवेस्तं वा केतोः संशोध्य गोलवित् ।
विशोध्यं भुज्यतं कोटिं शेषं कृत्वा विलिप्तिकाम् ॥ २५ ॥
नीपेनाभ्यस्य गोलात्मा भाजितं घटिकादिकम् ।
विक्षेपमाहुः शशिनस्तत्तद्गोलाख्यया श्रुतम् ॥ २६ ॥
अन्तरं विकलीकृत्य लम्बपर्व्वदिनार्द्धयोः ।
घनाभ्यस्ते नरमाप्ता लिप्तिकाश्च विलिप्तिकाः ॥ २७ ॥
न तेन लिप्तिकाहृत्य कारकां शिरसि क्षिपेत् ।
तदेतद्राक्षलिप्ताद्यं क्रमात्पूर्व्वापराह्णयोः ॥ २८ ॥
हित्वा दत्वा च लम्बार्के मध्यलग्नस्फुटं नयेत् ।
गोल्पादविधिं तत्र प्राक्कृत्वाकलीकृते ॥ २९ ॥
विभज्यशम्भुनालब्धं नतिज्यागणना भवेत् ।
सारङ्गरङ्गशरः पुत्रो धन्यो मान्यः मियः सना ॥
रत्नश्चेति नवैते तु खण्डानतिगुणाः स्मृताः ॥ ३० ॥
लब्धज्यां पूजयित्वाथ शेषघ्नान्त्यगुणादू हृते ।
शम्भुनैवममाहृत्य लब्धश्च शिरसि क्षिपेत् ॥ ३१ ॥
नतिज्याघटिका चैषा यदि चोत्तरोद्भवा ।
अक्षे विश्लिष्यते ऽन्योन्यं भवेद्याम्ये तु योजयेत् ॥ ३२ ॥
एवञ्च संस्कृते तत्र भुक्त्यन्तरविवर्द्धिते ।

विभज्या धनकान्तारैश्चिन्त्या लिप्तिविलिप्तिका ॥ ३
नतिविक्षेप एव स्यान्मध्यलमार्कगोलवान् ।
तुल्यादिनातिविक्षेपः शशिविक्षेपयोजितः ॥ ३४ ॥
भिन्नगोलस्तु विज्ञेयः परस्परविशोधितः ।
एवं युक्तो विशुद्धो वा स्फुटविक्षेप इष्यते ॥ ३५ ॥
यदासौ स्फुटविक्षेपः संयोगार्द्धेन चेत् समः ।
अधिको वा भवेत्तस्मात्तदार्को नोपरज्यति ॥ ३६ ॥
संयोगार्द्धञ्च विक्षेपमुभयं वर्गयेत् पृथक् ।
संयोगवर्गाद् विक्षेप वर्गं हित्वा तदन्तरे ॥ ३७ ॥
मूलमुलादयेत्तस्माच्चीवारमथ शोधयेत् ।
विवरे सनसा क्षुणे धनलब्धस्तु भाजकः ॥ ३८ ॥
तेन मूले हृते लब्धं स्थित्यर्द्धघटिकादिकम् ।
लम्बपर्व्वत्रिधास्थाप्यमादौ स्थित्यर्द्धमुन्नयेत् ॥ ३९ ॥
चरयेयोजयेन्मध्ये न दद्यान्न च शोधयेत् ।
प्रथमःस्पर्शकालः स्यात्तृतीयं मोक्ष इष्यते ॥ ४० ॥
ग्रासकालो भवेन्मध्यो यथा रूपमवस्थितः ।
बिम्बार्द्धद्वयमन्योन्यं विश्लिष्यपुनवर्गयेत् ॥ ४१ ॥
ततो विक्षेपवर्गश्चेत् शोधनञ्च विमर्द्दनम् ।
शोध्यश्चेत् शोधयित्वातः शेषे मूलञ्च साधयेत् ॥ ४२
पूर्व्वोक्तभागहारेण तत्र मूले विभाजिते ।
लब्धा नाडी विनाडी च विमर्द्दार्धमितीष्यते ॥ ४३ ॥
ग्रासकाले च मोक्षे च विमर्द्दार्द्धं विनिक्षिपेत् ।
आप्यायनं यदिर्विम्बाद्विमर्द्दनामकल्पते ॥ ४४ ॥
अशोध्ये पर्व्वलिप्ताभ्यः स्थित्यर्धेनद्वयान्तरम् ।
नक्तंदिवा च दिनश्चन्द्रयोर्मासनाडिका ॥ ४५ ॥

भास्वतः स्पर्शतः पश्चात् विमोक्षः पूर्व्वतो भवेत् ।
चन्द्रस्पर्शो भवेत् प्राच्यां विमोक्षः पश्चिमे भवेत् ॥ ४६ ॥
समार्कादधिको राहुर्ग्रसत्युत्तरकोणगः ।
ऊनो दक्षिणकोणस्थः केतुस्तूत्कविलोमतः ॥ ४७॥
सोमश्चेत् पश्चिमस्थायी राहुर्ग्रसति भास्करम् ।
भानुग्रासविलोमेन सोमग्रासं विनिर्द्दिशेत् ॥ ४८ ॥
सौम्यकर्णाश्रितो राहुर्वामवृत्तेन गच्छति ।
याम्यकर्णाश्रितो योयं दक्षिणावृत्ततो व्रजेत् ॥ ४९ ॥
हेमभङ्गाविलिप्तादि विम्बमानं विवस्वतः ।
योगकालः शशाङ्कस्य भवेद्राहोर्म्मनोनदी ॥ ५० ॥
वृत्तीकृत्य लिखेत्पूर्व्वं भानोर्विम्बदलं ततः ।
स्थापयेत् स्फुटविक्षेपं पातनिःस्टितदिङ्मुखे ॥ ५१ ॥
तदग्रे पूर्णचन्द्रस्य वृत्तिं सूत्रेण लिख्यते ।
यावद् ग्रसति राहुस्तं तावद्ग्रासानुमीयते ॥ ५२ ॥
विषुवद्वयङ्गुले वर्गी कृते ज्ञानभुजायसः ।
क्षिप्त्वा मूलमिहोत्पाद्य भागहारं समुद्दिशेत् ॥ ५३ ॥
नागिना पार्थिवाप्तासं भक्त्वा लब्धकलाफलम् ।
विषुवद्वयङ्गुलं क्षुण्णं भागहारेण भाजितम् ॥ ५४ ॥
ततो लब्धकलादिः स्यादवज्यानाम दक्षिणा ।
एवं संक्षेपमार्गेण सूर्य्यग्रहणमादिशेत् ॥ ५५ ॥

इति सूर्य्योपरागनिर्णयः ।

---

पौर्णमासीनिशापर्व्वपरिच्छेदस्समीपता ।
अङ्कत्रयमिदंदृष्ट्वा सोमग्रासं निरूपयेत् ॥ १ ॥

उक्तक्रमविरोधस्तु शुभाशुभविपाचकः ॥ १६ ॥
श्वेते तमसि विप्राणां पीडाक्षेमसुदृष्टयः ।
अग्निवर्णेऽग्निभीतिश्च पीडादहनजीविनाम् ॥ १७ ॥
हरिते रोगबाहुल्यमीतिभिः सस्यसंक्षयम् ।
अरुणांशुनिभे पीडा विहङ्गानामवग्रहः ॥ १८ ॥
कृष्णवर्णे तमोमूर्त्तौ शूद्राणांव्याधिमादिशेत् ।
हरिद्राभे विपादूर्व्वाश्यामे वा मरकं विदुः ॥ १९ ॥
सापरागौ पुष्पवन्तौ पततो वाप्युदङ्चतः ।
शारदानाञ्च सस्यानां भूपानामन्तकारिणः ॥ २० ॥
यदि पञ्चदशाहेन रविन्दूपरज्यतः
दुर्भिक्षशस्त्रकोपाभ्यां पीड्यते सनृपञ्जगत् ॥ २१ ॥
ग्रहणं गणितानीतं यद्यतिपूर्णं दृश्यते।
पञ्चग्रहसमायोगे म्रते राजा प्रणश्यति ॥ २२ ॥
सर्व्वग्रासः शुभैर्दृष्टः कुर्य्याद् दुर्भिक्षमारकौ ।
सम्राहात्र शुभादृष्टिः समयेद् ग्रहणे शुभम् ॥ २३ ॥
म्लेच्छा येकुलर्या सनाजलधयो मूर्खाः शृगालासनाः
शौचाचारविवर्जिताश्चधरताः सर्व्वे च निद्रालवः ।
विच्छिन्नावयवाः जनाः विवमनाः गर्भाशयस्थायिनः
क्रव्यादास्तिलमाषजातमभयो राहोस्तु वर्गोभवेत् ॥२४॥
राहोश्चारफलं ब्रूयाद् दुष्टानामपि जन्मिनाम् ।
ऋक्षोपराक्तवर्गे च तद्वर्गोपाक्षवत्सरे ॥ २५ ॥

इति राहुचरितं नाम नवमोऽध्यायः ।



अतः परं प्रवक्ष्यामि संकीर्णचरितं लघु ।
विशोध्य कलितर्वेभ्यो मानोदारं विचक्षणः ॥ १ ॥

अनिरोन विभज्यास्तमश्विन्यादिक्रमादिशेव् ।
स्थानं तत्वमसप्तसङ्ख्यानां मुनीनां त्रिदिवौकसाम् ॥ २ ॥
प्राच्यां मरीचिस्तदनु वशिष्ठश्चाङ्गिरास्ततः ।
अत्रिरस्मात्पुलस्त्यः स्यादतः पुलहनामवान् ॥
क्रतुरस्मात्परश्चेति क्रमशो मुनयः स्थिताः ॥ ३ ॥
उत्पातपीडिता एते स्ववर्गं पीडयन्ति हि ।
पुष्णन्ति वर्गविमलाः सुस्निग्धाःकिरणोज्ज्वलाः ॥ ४ ॥
प्रथमस्य मुनेर्वर्गे सिद्धमन्त्रौषधाञ्जनाः ।
द्वितीयस्य सकाम्योजाः धनिनश्च तपोधनाः ॥ ५ ॥
तृतीयस्य द्विजन्मानः पण्डिताः कवयो जनाः ।
चतुर्थस्य पयोवाहा गावश्च वनिता जनाः ॥ ६ ॥
पञ्चमस्य भुजङ्गाश्च पिशाचा राक्षस स्तथा ।
षष्ठस्य फलमूलानि चरमस्य श्रुतिबलाः ॥ ७ ॥
मरीचिर्मासमात्रेण स्ववर्गे पाचयेत् फलम् ।
मासवृद्धिक्रमादन्ये स्ववर्गे फलपाचकाः ॥ ८ ॥

इति सप्तमुनिचारनिर्णयः ।

---

अगस्त्यस्योदये वाक्यं कविवद्भावको भवेत् ।
अस्यैवास्तमये वाक्यं रवेर्मङ्गलमिष्यते ॥ १ ॥
विषुवच्छायङ्गुलेनादौ लब्धमृक्षादिकं फलम् ।
शोधयेदुदये वाक्यादस्तवाक्ये तु योजयेत् ॥ २ ॥
यदा भानोः स्फुटन्तत्त्व सदृशत्वम्मपद्यते ।

---

१ कुलपांसनाजलधियोमुर्ग्वाथगालाम्नना: । २ वत्सरात् । संकीर्ति । ४ मासोदारम् । ५ सकलकसूचक्षपद्धयिपाणद्दः ।

तदागस्त्यमुनिस्तपत् क्रियां प्राप्तो भविष्यति ॥ ३ ॥
निशि तमःपटलेऽरुणरश्मिभिर्छिद्युत्थं गामिने यमदिग्गतः।
उदपाति स्फुटिकोज्ज्वलरश्मिमान् सकलकश्चलपङ्कविपापहः॥४
परुषः कुरुते रोगान् कपिलोवृष्टिरोधकृत् ।
धूमो गवामशुभकृन्माञ्जिष्टाभः क्षुधावहः ॥ ५ ॥
स्वल्पमूर्त्तिः पुररोधं कुरुते कुम्भसम्भवः ।
चन्द्रनक्षत्रनियमात्कालवर्गोविनिश्चयः ॥ ६ ॥
उपासितार्घो यदि भूमिपालो नमन्नुपास्ते तदुदीयमानम् ।
स सप्त वर्षाणि करोति राज्यं निरीतिकं वीतरिपुममार्दवम्॥७॥
प्राप्नोति विद्यां तमुपागमानो द्विजः सुपुत्रान् वनिताजनाश्च ।
वैश्यस्तुगां पूरिधनानि शूद्रोयात्रार्थसिद्धिं खलु कर्णधारः॥८॥
इति अगस्त्यचारनिर्णयः ।

---

विलिप्तीकृत भान्विन्दू रवेनाभ्यस्यधीहृते ।
लब्धं पृथक्पृथग्ज्ञात्वा तयोरर्कस्य लाभतः ॥ १ ॥
शोधये द्दवन्मानं गम्भीरं चन्द्रलाभतः ।
भाजयेदुभयं सूत्रैः शिष्टमोजे यदि स्थितम् ॥ २ ॥
परिविपस्तदार्केस्या यदि युग्मे निशाकृतिः ।
तत्तद्दिनाधिपाश्रीय मारम्भक्षयदीप्तिमान् ॥ ३ ॥
अथवार्केन्दुलाभाभ्यां ज्ञानदीपहृतो हृतः ।
अवशेषे नतिप्राप्ता स्तयोः ज्ञेयाः स्फुटांशकाः ॥ ४ ॥
निम्नव द्विधास्थाप्य नीलं पूर्व्वत्र निक्षिपेत् ।
द्वयं स्फुटांशैर्विभजे ऽष्टमोजे यदि स्थितम् ॥ ५ ॥
रविन्दोःपरिधी स्याता मन्यथाशून्यसा तयोः ।
एतयोः स्फुटभागेषु नद्र्धविक्षिपेदतः ॥ ६ ॥

अभिष्टतिथिभिर्भक्त्वा शिष्टमोजे यदि स्थितम् ।
यदा वा परिवेषः स्यात्त्वयोरिति वदेद् बुधः ॥ ७ ॥
सर्व्वव्योमानगामी यः परिवेषः सशोणिमः ।
धनुश्शृंगाटसकटमतिमश्च न शोभनः ॥ ८ ॥
सेनाधिपस्य भयकृत् परिवेषो विमण्डलः ।
सादिभि श्शस्त्रकोपश्च युवराजनरेन्द्रहा ॥ ९ ॥
निरुद्धे सार्द्धमृक्षेण ग्रहे मण्डलरेखया ।
दिनत्रये न दृष्टिर्वा विग्रहोवा थ मासतः ॥ १० ॥
होरायाः जन्मराशे र्वापतिर्जन्मर्क्षमेववा ।
अन्तर्भवतिचक्रेचेत्तस्य राज्ञोशुभम्भवेत् ॥ ११ ॥
परिवेषगतो भौमः शस्त्राग्निभयदो भवेत् ।
बुध स्सुवृष्टिकृन्मन्त्री लेखकानाञ्च वृद्धिदः ॥ १२ ॥
जीवः पुरोहितामात्यभूपालानां विबाधकः ।
शुक्रः मायायिनां राज्ञां पीडयेदन्नहानिकृत् ॥ १३ ॥
शनिः कुधान्यविध्वंसी जनयेद् वृष्टिमारुतौ ।
राहुर्नृपभयं व्याधिं केतुर्गर्भभयं दिशेत् ॥ १४ ॥
द्वयो निरुद्धयोर्युद्धं जानीयात् क्षुद्भयं त्रिषु ।
क्षयो लोकस्य निर्दिष्टो ग्रहेषु चतुरादिषु ॥ १५ ॥
विप्रादीनां क्षयं कुर्यात्क्रमात्प्रतिपदादिषु ।
श्रेणी नगरकोशानां पञ्चम्यादिषु नाशकृत् ॥ १६ ॥
अष्टम्यां युवराजस्य परस्रीषु च भूभुजां ।
द्वादश्यां नगरक्षोभस्त्रयोदश्यां चमूभयम् ॥ १७ ॥
परतो महिपीनाशः पञ्चदश्यां नृपाशुभम् ।
ऋक्षग्रहवशान् ज्ञेयः कालवर्गो यथोत्तरः ॥ १८ ॥

इतिपरिवेषनिर्णयः ।

---

अर्केन्दुलाभं सम्पृक्तं षडभ्यस्तं चतुर्विधम् ।
षण्डिष्ठनुं षष्टिभेनुं क्रमात् तेषु विनिक्षिपेत् ॥ १ ॥
राज्यभानुतनुमाने भैक्त्वां शून्येषु हि क्रमात् ।
जीमूतवातपरिधिशक्रचापोदयस्तदा ॥ २ ॥
ऐन्द्रं धनुर्जले दृष्टं विधत्ते वृष्टिनिग्रहम् ।
भुवि सस्यवधं नाकौ शत्रुकोपंतरौ रुजः ॥ ३ ॥
अदृष्ट्यां वृष्टिकृद्दृष्ट्यां वृष्टिनुत् पूर्वदिग्भवम् ।
यदा पश्चिमदिग्भूतं वृष्टिकृत् शक्रकार्मुकम् ॥ ४ ॥
प्रागादेषु चतुर्दिक्षु निशायां धनुराहितम् ।
भूपसेनाधिपामात्यमन्त्रीणां भयदं क्रमात् ॥५॥
धनुः श्वेतादिवर्णः स्याद्विजादीनां भयावहम् ।
निशि स्वस्थितदिग्जातं निहन्याद्राजवल्लभान् ॥ ६ ॥
इन्द्रचापमथुद्भूतं शुभाशुभफलम्बुधः ।
अर्काधिष्ठितताराया वर्षे काले नचोद्दिशेत् ॥ ७ ॥

इतिइन्द्रचापनिर्णयः ।

---

अर्कोदये निपतितो निर्घातो घातको भवेत् ।
नृपानां धनिनाश्चाथ योधानां वणिजामपि ॥ १ ॥
गोजाविकमुपाहन्यात्तत्तदामहरावधिः ।
द्वितीये शूद्रपौरांश्च विप्रान् राजोपजीविनः ॥ २ ॥
तृतीये वैश्यजीमूतांश्चतुर्थांशे च तस्करान् ।
निहन्त्यस्तमये नीचान् सस्यजातानि पञ्चमे ॥ ३ ॥
षष्ठे पिशाचसङ्घातान् सप्तमे गजवाजिनः ।

---

१ कालवर्गोयाजोत्तरम् । २ सप्तकम् । ३ शून्यपुभिः ।

अष्टमे यायिनो याति यां दिशां हन्ति तद्‌वान् ॥ ४ ॥
देवालयेषु पतितः तद्भक्तानुपपीडयेत् ।
पतितो राजसदने विपत्तौ राष्ट्रशून्यताम् ॥ ५ ॥
निर्घातपातः फलति चन्द्रनक्षत्रजातिषु ।
मासपट्केन वा नोचेदन्यराशिनये न वा ॥ ६ ॥

इतिनिर्घातपातनिर्णयः ।

---

उल्काद्विजादिवर्णघ्नी सद्गायूरस्वर्णवाणभा ।
तथैव रुक्षानिर्दिष्टा पतिता चोत्तरादिषु ॥ १ ॥
अनुपद्मम्बरे यस्याश्चिरं तिष्ठति दण्डवत् ।
धृतेव तन्तुभिः वेषा चोधते सा च राजतुत् ॥ २
लोकसंक्षयमापन्ने शिशिरपञ्चस्वरूपिणी ।
सर्पवत् सर्पति या च सा स्त्रीणामहिता भवेत् ॥ ३ ॥
छत्रवन्मण्डलाकारा निहन्ति च पुरोहितम् ।
सा धत्ते राष्ट्रशून्यत्वं या स्थिता वंशगुल्मवत् ॥ ४ ॥
या व्यालशूकरसदृक्सहविस्फुलिङ्गा ।
खण्डा च निस्वनवती जगतः शुभा सा ॥
उल्का यतो ऽभिभयति स्वपुरं बलं वा ।
भूपस्य तस्य तत एव भयं वदन्ति ॥ ५ ॥
उल्का फलति सप्ताहात्पक्षमात्रणे वा पुनः ।
चन्द्राधिष्ठितनक्षत्रवर्गे वा दृष्टजन्तुषु ॥ ६ ॥

इतिउल्कानिर्णयः ।

---

१ यस्याम । २ खण्डाश्च ।

दिग्दाहः पूर्व्वदिग्जातः क्षत्रियानां भयावहः ।
आग्नेय्यां शिल्पिबालघ्नो याम्यायामुग्रजातिनुत् ॥ १ ॥
पश्चिमे कर्षकान् वायौ तुरङ्गैः सह तस्करान् ।
पीडयेदुत्तरे विप्रानैशान्यां वणिजांकुलम् ॥ २ ॥
दिग्दाहो वत्सरार्द्धेन मासानां सप्तकेन वा ।
चन्द्राधिष्ठितनक्षत्रवर्गे फलति भूरिशः ॥ ३ ॥

इतिदिग्दाहनिर्णयः ।

---

प्रथमे प्रहरे दृष्टं गन्धर्व्वनगरन्दिवि ।
राजोपजीविभयदं द्वितीये ब्राह्मणाहितम् ॥ १ ॥
तृतीये वैश्यवंशघ्नं तुरीये चोरनाशनम् ।
अस्य पाकस्त्रिभिः मासैस्तत्तद्देशेषु निर्दिशेत् ॥ २ ॥

इतिगन्धर्व्वनिर्णयः ।

---

धरिण्याश्चलनं पापं सौम्यनक्षत्रवारजम् ।
स्ववर्गे शुभदं भूयः परवर्गेषु दोषदम् ॥ १ ॥
केचित्पापफलम्भूमेश्चलनं सर्व्वदा जगुः ।
पच्यते चलनं धाऽयाः वत्सरद्वितयान्तरे ॥ २ ॥

इतिभूचलननिर्णयः ।

---

पञ्च दुर्भिक्षकर्तारः षट् पार्थिवभयप्रदाः ।
सप्त सर्व्वविनाशाय सकृदेकत्रगा ग्रहाः ॥ १ ॥
यस्यां दिशि ग्रहाः सर्व्वे लीयन्ते तिग्मधामनि ।

---

१ सहदम् ।

व्याधिदुर्भिक्षदारिद्र्यार्थस्तस्यां दिशि जनो भवेत् ॥ २ ॥
र वावन्तमिने यत्र देशे ग्रहपरम्परान् ।
दृश्यते तत्र शत्रूणां वाग्मेरेण नृपोऽन्यथा ॥ ३ ॥
पद्मोत्पलयवादीनां चित्राणामेकनालकम् ।
सम्भवः फलपुष्पाणां यमलत्वञ्च भीतिदम् ॥ ४ ॥
परयोनिषु गच्छन्तो मैथुनं देशनाशनम् ।
अन्यत्र विपयोत्पत्तिर्नृणाञ्चाजातिमैथुनम् ॥ ५ ॥
सर्व्वे दुर्भिक्षकर्तारः स्वजातिपिशिनाशनाः ।
सर्पमूषिकमार्ज्जारमयुरोमविवर्ज्जिताः ॥ ६ ॥
ग्रामारण्यचराः ये च ये दिवा यामिनीचराः ।
ते ते व्यत्ययिताः दृष्टाः दधतो देशशून्यताम् ॥ ७ ॥
गृहतोरणचैत्येषु द्वारेषु च भयप्रदाः ।
पक्षिणां सन्निपातश्च मधुवल्मीकदर्शनम् ॥ ८ ॥
एकस्मानेकदेयानां कुसुमफलदर्शनम् ।
अतिवृद्धिश्च सस्यानां परचक्रागमं वदेत् ॥ ९ ॥
तिलानां मर्दनात्तैलमतैलत्वञ्च वा यदा ।
अन्नस्य विरसत्वञ्च तदापि सुमहद्भयम् ॥ १० ॥
मावृट्कालं विनान्यत्र समये सप्तवासरम् ।
प्रबन्धेन महावृष्टिः प्रधानमरणं वदेत् ॥ ११ ॥
यदि छाया न दृश्यन्ते विमलेपि विवस्वति ।
पल्लीपतो वा दृश्यन्ते भवेत्तस्मिन्नुपद्रवः ॥ १२ ॥
कुक्कुटाः क्षणदारम्भे हेमन्तादौ च कोकिलाः ।
रुदन्तो देशनाशाय श्येनाश्च प्रतिचक्रगाः ॥ १३ ॥

---

१ एकमालताम् । २ येपर ।

शिशवश् शस्त्रकाष्ठाश्चै पाणयस्तु परस्परम् ।
महरच्छिन्दिभिन्दीति निगदन्तो भयप्रदाः ॥ १४ ॥
चित्रितश्चित्ररूपाणां तद्भक्तानां भयप्रदाः ।
विकृतप्रसवस्तत्तद्वर्गशून्यत्वमावहेत् ॥ १५ ॥
अग्नेर्भयङ्करो घोषो नाग्नेरुज्वलनं तथा ।
रसितं लोहभाण्डानां गमनञ्च भयप्रदम् ॥ १६ ॥
अप्राणिनां वचोवीतशरीराणाञ्च गर्जनम् ।
सलिले शोणरेखा च न चिराद् भयमादिशेत् ॥ १७ ॥
सस्यवृक्षजलानाञ्च वृद्धिर्भूतलभूभृताम् ।
उत्पातः प्रभुनाशाय सर्व्वश्चाद्भुतदर्शनम् ॥ १८ ॥
उन्मत्तानाञ्च या गाथाः शिशूनां भाषितञ्च यत् ।
स्त्रियोयच्चप्रभासन्ते तस्य नास्ति व्यतिक्रमः ॥ १९ ॥
पाशाण्डानां नास्तिकानाञ्च वादः
साध्वाचारप्रोज्झितः क्रोधशीलः ।
ईर्षालू र्वा विग्रहेच्छु र्नृपो वा
यस्मिन् देशे तस्य नाशो न दूरः ॥ २० ॥
सीमासीमन्तिते सर्व्वप्रदेशे स प्रजापतिः ।
नक्षत्रराशिराश्यार्द्धस्तत्क्षणेन ग्रहान्वितः ॥ २१ ॥
द्वे रेखे दीर्घतो गर्भे तिर्य्यग्वाष्टौ समालिखेत् ।
मध्ये प्रजापतिस्तत्र प्राग्दक्षिणेन तारकः ॥ २२ ॥
तिर्य्यग्मध्यमसूत्रस्य तद्द्वारं प्रतादिषु ।
तदधस्तारकापूर्व्वं सूत्रं सर्व्वत्र योजयेत् ॥ २३ ॥
त्रयोदश विनाडीभ्भिरधिके घटिका द्वये ।

---

१ द्योतस्यप्रतिचप्रगाः । २ पाणयास्तु । ३ शोणप्ररेखा ।
४ उन्मत्तानाञ्च । ५ प्रभ्यस्ते । ६ तद्द्वारं प्रतीभिराम तु ।

ताराश्चलन्त्यतिक्रान्ते न मध्यस्थः प्रजापतिः ॥ २४ ॥
प्रजापतौ समुद्भूते नोत्पातः शस्यते सदा ।
शेषेषु तत्तन्नक्षत्रग्रहयोगैः शुभाशुभम् ॥ २५ ॥
सर्व्वत्रोत्पातजातेषु लोकपालान् सहग्रहान् ।
अभ्यर्च्य तोषयेद्दानै र्गुणिनस्तु यथाधनम् ॥ २६ ॥
कोशातकी विपदकेतकमातुलुङ्ग
दूर्व्वा सहाहरिवधूजलजन्मबिल्वैः ॥
गोरोचना जलसकृत्वककटुदुग्धयुक्त
स्नानीय मूष्णसलिलं दुरितापहारी ॥ २७ ॥
भूमिजं भूमिदानेन गोदानेनान्तरीक्षजम् ।
उत्पातं सर्व्वतो जातं हेमदानेन वाजयेत् ॥ २८ ॥
इत्युत्पातनिर्णयः ॥
—०**०—

## इति सङ्कीर्णचरितं नामदशमोऽध्यायः ॥



इत्यनवमदर्शिनःस्थविरस्य कृतौ दैवज्ञकामधन्वा
धरिति प्रकरणं नाम प्रथमम् ।



यद्भोजराजादिभिरादिधीरैरादेशतन्त्रम् बहुधा वितेने ।
सारं समुद्धृत्य ततःस्फुटार्थमविस्तृतं सम्प्रति सूत्रयामि ॥१॥
राशयो द्वादशाजाद्या अश्विन्यादिनवांघ्रयः ।
अवसानं कुलीरालौ मीनानाम्नृक्षमन्वयः ॥ २ ॥
मिथुनं मगदादीनं युगलं नरयोषितोः ।

१ समुद्भूतौ । २ यादेशतंत्रम्बहुधा ।

तुला तुलावान् पुरुषः कुम्भःकुम्भधरो नरः ॥ ३ ॥
सस्यदीपकरा कन्या कन्यानावमधिष्ठिता ।
धनुर्धन्वी पुमानश्वजघनःपरिकीर्त्तितः ॥ ४ ॥
झषो मृगास्यो मकरो मीनो मत्स्ययुगम्भवेत् ।
शेषाःस्वनामसदृशाः सर्व्वे स्वस्थानगोचराः ॥ ५ ॥
ईषद्रक्तश्च धवलो हरितः पाटलद्युतिः ।
पाण्डुर्विचित्रवर्णश्च कृष्णःकनकसन्निभः ॥ ६ ॥
पिङ्गलःकर्बुरश्चैश्च बभ्रूश्च मलिनः क्रमात् ।
मेषादिमीनपर्य्यन्ताः रुचयःपरिकीर्त्तिताः ॥ ७ ॥
क्रूरः सौम्यः पुमान्नारी चरःस्थिरो द्विरूपवान् ।
द्वारं बाह्यश्च गर्भश्च क्रमान् मेषादयःस्मृताः ॥ ८ ॥
चत्वारो राशयोजाद्याः पञ्चमैर्नवमैस्सह ।
प्रागादीनां दिशामीशाःक्रमेण परिकीर्त्तिताः ॥ ९ ॥
नृचतुष्पदकीटाख्याः प्रागादीशा बलोत्तराः ।
द्युरात्रिसन्ध्याबलिनो नृचतुष्पदकीटकाः ॥ १० ॥
कुजशुक्रज्ञचन्द्रार्कसौम्यशुक्रारसूरयः ।
मैङ्क्युमन्दसुराचार्य्याः मेषादिभवनेश्वराः ॥ ११ ॥
होरा राश्यर्द्धमोजे तु प्रथमा रश्मिमालिनः ।
पश्चिमा हरिणाङ्कस्य समगर्शेविपर्य्ययात् ॥ १२ ॥
राशित्रिभागो द्रेष्काणः प्रथमो भवनेशितुः ।
द्वितीयः पञ्चमेशस्य तृतीयो नवमेशितुः ॥ १३ ॥

अंशाःनवाजहरिचापभृतामजाद्याः
नक्रादयो वृषवधूमकरांशकाःस्युः ।
तौल्यादयो मिथुनतौलिघटांशकाश्च

---

१ चरस्थास्तु । २ पेतु ॥

कर्क्योदयश्चरमवृश्चिककर्कटांशाः ॥ १४ ॥

चरस्थिरद्विरूपेषु भवनेषु यथाक्रमम् ।
आदिमध्यान्तगा भागाः स्मृता वर्गोत्तमा बुधैः ॥ १५ ॥
राशिःद्वादशभागात्मा तत्रभागा यथाक्रमम् ।
तदादिगदयधीशानां विपश्चिद्भिर्विकल्पितः ॥ १६ ॥
राशिस्तु त्रिशदंशः कुजरविजसुराचार्य्यशाशाङ्कशुक्राः
राशेरोजस्य बाणेन्द्रियभुजगमुनिमाणभागाधिनाथा ।
शुक्रज्ञाचार्य्यसूर्य्यात्मजधरणिसुता युग्मराशेस्तु वायुः
र्शाणीभृद्वृप्पाल्जानिस्मरशरमकमांमंशकानामधीशाः ॥१७॥

पृष्ठोदया मिथुनसिंहतुलाधराश्च
सीमन्तिनी कलसवृश्चिकराशयश्च ।
मूर्द्धोदया मकरगोजधनुः कुलीराः
स्यान्मीनराशिरुभयोदयनामधेयः ॥ १८ ॥

तात्कालिकोदयोमूर्त्तिः कलयश्च हृदयं भवेत् ।
द्वितीयन्तु धनं धान्य तृतीयं भ्रातृविक्रमौ ॥ १९ ॥
तुरियन्तु सुहृद्वेश्म पातालसुखबन्धवः ।
पञ्चमं पितृधीपुत्राः षष्ठं रुग्वैरवैरिण ॥ २० ॥
सप्तम युवतिरागो रन्ध्रं मोहोऽष्टमं स्मृतिः ।
नवमन्तु तपोभाग्यगुरुधर्मगुणोदयः ॥ २१ ॥
दशम मानकर्म्मज्ञः लाभस्त्वेकादशंच यः ।
द्वादशश्च व्ययं मानं सर्व्वं स्वाख्यातसूचकम् ॥ २२ ॥
षष्ठं तृतीयदशममेकादशमथापि च ।
विद्यादुपचयस्थानमन्यत्रापचयाभिधा ॥ २३ ॥
सर्व्वस्वस्वामिभिर्य्युक्तं दृष्टं वा बलवद्भवेत् ।
मूर्त्तिर्बुधं गुरुभ्याश्च युक्तादृष्टा बलोत्तराः ॥ २४ ॥

मेषस्य द्वादशोभागांस्त्रिकोणमपरे गृहम् ।
सितासितौ समौ शत्रुः शशिनः सुहृदः परे ॥ ३५ ॥
कृशोऽनुद्धप्रपुंसाञ्च क्षत्रियानाञ्च नायकः । -
सामवेदप्रियःशाक्यः भिक्षूणां दर्शने स्थितः ॥ ३६ ॥
विस्पूनमूर्तिर्निपुणः क्रियासु
दूर्वाङ्कुरश्यामतनुर्शिरालः ।
स्थूलच्छविर्म्भुवचःसुहृत्तों
हास्यप्रियचन्द्रसुतः सदैव ॥ ३७ ॥
चन्द्रपुत्रस्य कन्यायामुच्चं पञ्चदशांशकः ।
त्रिकोणमपरेनीचश्चरमे तावदंशकः ॥ ३८ ॥
शुक्रार्कौ सुहृदौ शत्रुश्चन्द्रःशेषास्तु मध्यमाः ।
एकदण्डीधरः सर्वःशण्डशूद्राधिपःस्मृतः ॥ ३९ ॥
स्थूलः कफात्मा कनकाभवर्णो मेदोधिको ह्रस्वतनुश्च धीमान्
पिङ्गेक्षणः पिङ्गलमूर्द्धजन्मा गुरुस्सुरगणामितिसम्प्रदिष्टः॥४०॥
जीवस्य परमोच्चन्तु कर्कटे पञ्चमोशंकः ।
तावदेवांशको नीचो मकरे परिकीर्तितः ॥ ४१ ॥
हयाङ्के पञ्चमोभाग स्त्रिकोणमपरेगृहम् ।
शत्रू सौम्यसितौ मध्यो रविज सुहृदः परे ॥४२॥
ऋग्वेदवत्सलःपुंसां विप्राणाञ्च विभुःस्मृतः ।
नभोग्रहो यतीनान्तु समये भक्तिमान् गुरुः ॥ ४३ ॥
श्यामोविकृष्टपर्वा च कुटिलासितमूर्द्धजः ।
कफानिलात्मवान् शुक्रसारश्च भृगुनन्दनः ॥ ४४ ॥
सप्तविंशांशको मीने परमोच्चं भृगो भवेत् ।

---

१ शत्रुदर्शाशिज-सुहृदःपरे । २ भापप्रियः । ३ तावदंशकः । ४ षषंसण्ड । ५ कफात्मा । ६ पाण्डेरतनुरह ।

कन्यायां पञ्चमो नीच स्तावदंशकः स्मृतः ॥ ४५ ॥
तुलायां पञ्चमो भागस्त्रिकोणमपरं गृहम् ।
शार्की विंशे गर्मांर्भा मंगुरूशेषास्त्वरयःस्मृताः ॥ ४३ ॥
यजुर्वेदप्रियः स्त्रीणां विमाणाञ्च विनायकः ।
भार्गवः मलिलाधीशश्चनरकानां मतप्रियः ॥ ४७ ॥

स्थूलद्विजन्मनखलोमयुतःपरेषां
दोषैकसूचनपटुः कृशदीर्घगात्रः ।
स्नायुत्तरः कपिलदृङ्मरुतात्मकश्च
कृष्णः सभाकरसुतो महिमादिसक्तः ॥ ४८ ॥

तुलायामंशको विंशः परमोच्चंशनेर्भवेत् ।
तावदंशको मेषे परमं नीचमिष्यते ॥ ४९ ॥
कुम्भेविंशति रंशाःस्युस्त्रिकोणमपरे गृहम् ।
शुक्रज्ञौ सुहृदौ जीवो मध्यमो ऽन्येतु शत्रवः ॥ ५० ॥
मारुतग्रह एपस्यात् शङ्करोद्भवनायकः ।
सहायः शण्डजातीनां क्षीकानां तुमतप्रियः ॥ ५१ ॥
सर्वेषामेव तत्काले स्थिताः मित्राणि सम्मताः ।
द्वितीयादित्रये वापि दशमादित्रयेपिच ॥ ५२ ॥
अधिमित्रमधिद्वेपि विश्वरूपविवर्जितः ।
यथार्हमिति बोद्धव्यास्तत्कालेपि ग्रहाः क्रमात् ॥ ५३ ॥
रविःशुक्रःकुजाराहु र्यमश्चन्द्रो बुधो गुरुः ।
प्रागादीनां दिशामीशाः क्रमेण परिकीर्तिताः ॥ ५४ ॥
पापाःक्षीणेन्दुरादित्यः क्षमापुत्रश्शनैश्चरः ।
गुरुःशुक्रश्च पूर्णेन्दुः सौम्यः सौम्यास्तु योगतः ॥ ५५ ॥

---

१ तुलायांसप्तमो । २ मित्रम् । ३ गुरुस्सोवारिस्मृतो । ४ सलिलादिधिश्च । ५ मारुण ।

अतःपरं प्रवक्ष्यामि रहस्यं ज्योतिषागमे ।
आयुर्दायविधानं हि सारं मुनिमतान्तरे ॥ १ ॥
असन्निधौ जन्मपितुश्शशाङ्के सितज्ञयोर्मध्यगतेऽथ केन्द्रे ।
होरामपश्यत्युदये शनौ वा लग्नात्कुजे वा यदि सप्तमस्थे॥२॥

सार्कःशशी भवति पापयुतोऽथवापि
जीवो न लग्नमपि पश्यति नापि चन्द्रम् ।
सार्कं शशाङ्कमपि पश्यति नैव जीवो
जातःपरं भवति जारसुतः तदानीम् ॥ ३ ॥

गुरुक्षेत्रगते चन्द्रे तद्युक्ते चान्यराशिगे ।
तद्द्रेष्काणे तदंशे वा नांपरैर्जात इष्यते ॥ ४ ॥
लग्ने यो द्वादशांशःस्यात्तद्दिग्द्वारं गृहम्भवेत् ।
तदीशदिङ्मुखं चापि भणित्याचार्य्यसम्मतम् ॥ ५ ॥
विलग्नराशिसिद्धा वा ककुप्केन्द्रस्थितस्य वा ।
बलिनो वा भवेदासां द्वारे जननसद्मनः ॥ ६ ॥
लग्नात् षष्ठाष्टमो वापि चन्द्र-पापनिरीक्षितः ।
अर्द्धगास्सूतिकाः शुद्धे मृत्युमद्धा प्रयच्छति ॥ ७ ॥
स एव शुभदृष्टश्चे दष्टाब्दे मृत्युदो मतः ।
दृष्टःसद्भिरसद्भिश्च तदर्द्धाब्दे करोति तत् ॥ ८ ॥
षष्ठाष्टमगतश्चन्द्रो न सर्व्वैर्वा निरीक्ष्यते ।
सौम्ययुक्तोऽथवा सौम्य क्षेत्रगोवान मृत्युकृत् ॥ ९ ॥

पक्षे सिते भवति जन्म यदि क्षपायां
कृष्णेऽथवाऽहनि शुभाशुभवीक्षितोऽपि ।
तच्चन्द्रमा रिपुविनाशगतोऽपि यत्ना
दापत्सु रक्षति पितेव शिशुं निहन्ति ॥ १० ॥

---

१ वरे ।

सौम्याश्च षष्ठाष्टमगा बलाढ्यैः
पापैस्सुदृष्टाःसदवीक्षिताश्च ।
मासेन मृत्युं जनयन्ति होरा
धिपाश्च पापापजितास्तथास्ते ॥ ११ ॥
अष्टमे शशिनःक्रूरसहितं मरणावहम् ।
लग्ने पापयुते चन्द्रः पञ्चमस्थश्च दोषदः ॥१२॥
द्वादशस्थानगश्चन्द्रः सूर्य्यःसूर्य्यसुतः क्रमात् ।
मातुः पितुश्च सूनोश्च व्याधिं वहति भूरिशः ॥ १३ ॥
भाग्यपूष्याप्यचित्राणां पादेषु च यथाक्रमम् ।
पितुर्मातुश्चतद्भ्रातु र्बालस्य च मृतिर्भवेत् ॥ १४ ॥
पापग्रहयुतश्चन्द्रो भजेत्तात्तत् शुभेतरम् ।
मातुर्मरणमाचष्टे पितुश्च दिनकृत्तथा ॥ १५ ॥
गर्भं निहन्ति शीतांशुर्मध्यगो वक्रमन्दयोः ।
सपापदृष्टो होरास्थस्तादृशो जननीमपि ॥ १६ ॥
सन्ध्यायां चन्द्रहोरायां क्रूराश्यन्तसविनः ।
मृत्युदाश्चन्द्रपापाश्च प्रत्येकं केन्द्रसेविनः ॥ १७ ॥
वक्रस्य पूर्वार्धगताश्चपापाः शुभाश्च पार्श्वार्धनिसेविनश्चेत् ।
लग्ने कुलीरेऽपि च वृश्चिके वा जातस्य मृत्युर्न चिरेण दृष्टः॥१८
क्षीणे शशाङ्के लग्नस्थे पापाश्च केन्द्रसेविनः ।
अष्टमे वाभेवयुक्ते तदाजातो न जीवति ॥१९॥
क्रूरग्रहयुतश्चन्द्रो व्ययोदयकलत्रगः ।
नष्टमद्वीक्षणः केन्द्रैः शुभवर्ज्जैश्च मृत्युदः ॥२० ॥
चत्राशिगतोवेन्दुः सप्तमस्थोऽपि वामवेत् ।
क्रूरयोर्मध्यपातश्चेत् तदापि मरणप्रदः ॥ २१ ॥

---

१ शुभेतरात् । २ वक्रचन्द्रयोः ॥

क्रूरेषु सप्तमस्थेषु चन्द्रो लग्नगतो यदि ।
तदापि मरणं मासि बादरायणसम्मतम् ॥ २२ ॥
चन्द्रे व्ययगते क्षीणे पापैर्लग्नाष्टमाश्रयैः ।
कण्टकैः शुभवर्ज्जैश्च जातस्य मरणं भवेत् ॥ २३ ॥

शशिनि शनिसमेते लग्नगे सोपरागे
क्षितिसुतवति रन्ध्रे नाशमाशु[1]श्च मातुः ।
स्थितवति सबुधे वा सार्कजे वा तथार्के
भवति मरणमुक्तं पूर्व्ववच्छस्त्रजातम् ॥ २४ ॥

लग्नाष्टनवमान्तस्थे सोमारार्कशनैश्चरैः ।
अदृष्टैर्गुरुणा शक्तिमता मृत्युमिहादिशेत् ॥ २५ ॥
क्षीणेन्दुर्लग्नपुत्रन्स कामधर्म्मसमाश्रयः ।
नाशकृद्बलिभिर्जीवासितज्ञैरयुतेक्षितः ॥ २६ ॥

यस्मिंस्स्थो जननसमये शक्तिमान्योगकर्ता
तत्र मासे शिशिरकिरणे पापदृष्टे समन्तात् ।
मृत्युर्वाच्यश्शशिनि बलिनि स्वर्क्षगे वापि धीरै ।
[2]बन्धुच्छेदादिभिरपहतःस्यादरिष्टोपघाते ॥२७॥

विवर्द्धमानः शशभृत्समस्तग्रहैःसुदृष्टो विनिहन्त्यरिष्टम् ।
चन्द्रात्तु षष्ठाष्टमसप्तमस्थाः सौम्याश्च रक्षन्ति [3]शिशून् विपापाः २८
होरागतो जन्मपतिः समस्तै र्निरीक्षितः पापबलं क्षिणोति।
चन्द्रः शुभस्वोच्चगतश्च मित्रवर्गस्थितो वा न करोत्यरिष्टम् २९

होरागतो गुरुरदंशुरुदात्तशक्ति
रेकोपि हन्ति दुरितं शुभदृष्टमूर्त्तिः ।
राहुस्तथैव कथितस्त्रिषडायसंस्थः
सौम्येक्षितोऽपि शुभखेचरषड्गतोऽपि ॥३०॥

---

१ यमातः । २ बन्धुच्छेदादिभिरुपहतः । ३ शिशुः । ४ ———

अजे कुलीरे वृषभेऽथवापि लग्नत्वमाप्ते यदि राहवास्ते ।
शूपाचदा मङ्गलमेव यद्वा भवन्ति योगा बहवः शुभाश्च ३१
आयुस्तैलमिव प्रोक्तं शरीरं वर्त्तिका यथा ।
चेतः प्रदीपवत्तत्र प्रत्युपायास्तु वायुवत् ॥ ३२ ॥
अभावमेवारिष्टानामवसीय बुधः पुरः ।
पश्चादायुर्विधानेषु यथा देशं प्रवर्त्तताम् ॥ ३३ ॥
निर्गच्छतो योनिमुखान्मूर्द्धालग्नमिति स्मृतम् ।
ततः प्रभृति निर्देश्याः क्रमशोऽन्येऽपि राशयः ॥ ३४ ॥
शीर्षोदयस्यपुंसस्तु नियमोऽयं प्रकल्पितः ।
पादोदयस्य तास्यादे विलोमेन प्रकल्पयेत् ॥ ३५ ॥

मूर्द्धा ललाटास्यतटीकपोलौ
कण्ठोऽयं वक्षो हृदयञ्च कुक्षी ।
कट्यूरुजानूनि तथैव जङ्घे
पादौ च लग्नानि भवन्ति भानि ॥ ३६ ॥

ग्रहाणां सदसद्भावैस्तत्तदाश्रितमस्तकम् ।
पुष्टञ्च परिहीनञ्च विनिश्चित्य वदेद्बुधः ॥ ३७ ॥
भानुः पिता शशी माता शुक्रः पत्नी सुतादिकम् ।
गुरुर्विभवरूपादिर्बुधो बुद्धिश्च वैरिणः ॥ ३८ ॥
कुजस्तु सोदरोत्साहौ शनिर्गो किङ्करादिकम् ।
कुमारो लग्नमेव स्या दिसेवंग्रहसङ्ग्रहः ॥ ३९ ॥
नीचाद्भ्रष्टं खगं स्वोच्चमारोहन्तं विनिर्दिशेत् ।
उच्चाद्भ्रष्टं पुनर्नीचमवरोहन्तं मादिशेत् ॥ ४० ॥
भानुः परमनीचस्थो द्वाचत्वारिंशदंशुमान् ।
ततो यथा बलञ्चान्ये विरूपाः नांशवः क्रमात् ॥ ४१ ॥

---

क्षौ । २ मादिशेत् । ३ विरूपो ।

दलिता नीचपादास्ते परमोच्चेषु वत्सरः ।
उच्चस्थस्य रवेर्दायः सरदामेकविंशतिः ॥ ४२ ॥
एकैकोनात् स्वतः शेषग्रहाणां दाय उच्यते ॥ ४३ ॥
उच्चतो नीचतो वापि शोध्यं वाशेष्यमेव वा ।
निश्चिस तत्र राश्यंशात् सवर्णान् लग्नवर्द्धितान् ॥ ४३ ॥
नवेन भाजयित्वाथ ताराद्यं तद्ग्रहस्फुटे ।
योजयेच्छोधयेद्वासौ कर्म्मभूमिस्फुटो भवेत् ॥ ४४ ॥
आरोहतः स्फुटं कृत्वा विलिप्तां नीचराशिभिः ।
समं गुण्यतपः प्राप्तमसुरैर्दिवसादिकम् ॥ ४५ ॥
उच्चभ्रष्टे तथा लब्धमुच्चदायाद्विशोधयेत् ।
लग्ने परमदायन्तु नववर्षाणि निर्दिशेत् ॥ ४६ ॥
लग्नस्फुटैर्विलिप्तासुं ज्ञानपादाहृतं वृथा ।
ज्ञात्वावशेषराश्यर्द्धं पृथक् कृत्वा दिवाहृतम् ॥ ४७ ॥
ततस्तन्नीचपाठेन लब्धा वर्षादयः स्मृताः ।
समभे वर्धते पूर्व्वं पश्चार्द्धे परिहीयते ॥ ४८ ॥
ओजे विपर्य्ययात् साध्यं होरादायो भवेदयम् ।
अयमेव विनिर्दिष्टो ऽरिष्टदोषाय सूरिभिः ॥ ४९ ॥
अनुलोमायुषं पिण्डमेवमानीय बुद्धिमान् ।
यथोक्तविपरीतेन प्रतिलोमायुरानयेत् ॥ ५० ॥
तत्कालिकविभागेन क्रमान्नीचोच्चवेश्मनोः ।
अभुक्तेन च भुक्तेन प्रतिलोमायुराहृतम् ॥ ५१ ॥
अनुलोमायुरानेयं निसर्गबलिनां क्रमात् ।
प्रतिलोमायुरानेयं तत्कालबलिभि र्ग्रहैः ॥ ५२ ॥
अनुलोमायु विज्ञेयं मित्रादित्वान्निसर्गतः ।

१ विलिप्तानां । २ छाय । ३ हनम् । ४ क्षेत्रम्

तत्कालिकविधानेन मतिलोमायुपि[2] ध्रुवम् ॥ ५३ ॥
निजक्षेत्रस्थिताः स्वर्य्यमित्रोदासीनविद्विषाम् ।
अंशकेपु स्थितांस्त्वेक द्वित्रिपादांशकैर्य्युताः ॥ ५४ ॥
मित्रक्षेत्रस्थिताः स्वर्य्यमित्रोदासीनविद्विषाम् ।
अंशकेपु स्थिताः द्वित्रिचतुःपञ्चांशकैर्य्युताः ॥ ५५ ॥
शत्रुक्षेत्रस्थिताः मित्रक्षेत्रोक्तस्य विपर्य्ययात् ।
लब्धं सजन्त्युदासीनक्षेत्रैनैवं विधिर्भवेत् ॥ ५६ ॥
हानावस्तमितास्वार्द्धं सहस्थामदनांशकम् ।
सजन्ति शशिना योगे न किञ्चिदपि खेचराः ॥ ५७ ॥
पुष्पवन्तौ विनैकत्र स्थिताःशेषा यथाक्रमम् ।
हित्वा द्वितीयां बलिनां सङ्ख्यांशोनास्वदायतः ॥ ५८ ॥
सौम्यक्रान्तार्द्धहोरायाः दायस्तु द्विगुणोभवेत् ।
क्रूरक्रान्तार्द्धहोरायाः दायस्तु दलितो भवेत् ॥ ५९ ॥
सेष्यम्माक्षिप्य सर्व्वत्र दायो शोध्यं विशोधयेत् ।
भुक्ताभुक्तवशादेव मायुः पिण्डद्वयं भवेत् ॥ ६० ॥
उभयोरायुषोः शिष्टमन्तरालंकलीकृतम् ।
जनकेन ततो हृत्वा सम्प्राप्तं दिवसादिकम् ॥ ६१ ॥
प्रतिलोमायुरुक्तं यदि तस्माद्विशोधयेत् ।
ऊनं यदि भवेदेतत् तत्रैव हि नियोजयेत् ॥ ६२ ॥
एवं पुनः पुनः कुर्य्यादनुलोमायुषा सह ।
जनकमाप्तलाभस्तु यावदेव विशेषनाम् ॥ ६३ ॥
प्रतिलोमायुषःपिण्डस्तदायुर्द्दाति स्मृतः ।
अनुलोमायुपि प्राप्तैः क्रियेयं न विधीयते ॥ ६४ ॥

---

१ स्लेपम् । २ ध्रुवम् । ३ सेत्यष् । ४ जनक । ५ दायदेस्य विशेपनाम् ।

ऊनायुः पिण्डसङ्ख्यानां यदि छिद्रदशायुतम् ।
तदैव मरणं व्युचदशा चेज्जीवति ध्रुवम् ॥ ६५ ॥

## इत्यायुर्दायादेशोनाम द्वादशोऽध्यायः।

---

## त्रयोदशोऽध्यायः ।

---

अतःपरं दशाभेदः समासेन विभाव्यते ।
उभयोरायुषोः कल्पा दशाचानुदशा बुधैः ॥ १ ॥
क्षेयं शोध्यं विशुद्धो यो दायो यस्य स्फुटीकृतः ।
सा दशा तस्य विज्ञेया तदुक्तफलशालिनी ॥ २ ॥
पूर्व्वं होरा दशाज्ञेया ततो वार्कास्थितिः क्रमात् ।
दशाविकल्पिते तत्र वहुष्वपि वलीयशः ॥ ३ ॥
वहूनां वलसाम्येतु प्रथमा वहुदायिनः ।
तेषाञ्च साम्ये प्रथमं विश्लिष्टस्य दिवाकरात् ॥ ४ ॥
गलाग्रमेढ्रदेशेषु पापपातोपमृत्युदः ।
सौम्यपातस्तु पीडाकृदन्यत्र निगडादिकम् ॥ ५ ॥
स्वाष्टमानं ग्रहाणान्तु होरादायो विभज्यते ।
परेषां दायभागन्तु होरा न भजति स्वयम् ॥ ६ ॥
भक्त्वा तत्तद्दशाकालमायुः पिण्डेन तत्पलम् ।
तत्तद्दायेषु गुणयेत् सा तदन्तर्दशा भवेत् ॥ ७ ॥
क्रूरदशायां क्रूरः प्रविश्य चान्तर्दशा यदा कुरुते ।
पुंसः स्यात् सन्देहस्तदारियोगे सदैव महान् ॥ ८ ॥
यो लग्नाधिपतेः शत्रुः लग्नस्यान्तर्दशां गतः ।

---

१ सङ्ख्यातं । २ व्युच । ३ व्यार्क । ४ वलिनोदशा । ५ दैव
हान् ।

करोत्यकस्मान्मरणं सत्याचार्य्यमतं यथा ॥ ९ ॥
होरेशाधिष्ठितदृशामष्टमेशे उपागते ।
ज्ञेयम् तनूजसन्देहो देहिनां पति मॅण्डलम् ॥ १० ॥
भवेशे बलवान् खेटः शुभैर्वा सन्निरीक्षतः ।
सौम्यादिमित्रवर्गस्थो मृत्युकृन्न भवेत् तदा ॥ ११ ॥
अन्तर्दशाधिनाथश्चेद्दिबलो बलिना युतः ।
उभौ वा बलहीनौ वा भग्नश्छिद्रदशा भवेत् ॥ १२ ॥
विजयी युधि यद्येको ग्रहयोश्च शुभो यदि ।
तद्दशा न भवेद्दं कष्टास्त्वोचांशादिजुषो ऽपि च ॥ १३ ॥

भानोर्दशा सुविजयी बहुमानपात्रः
विद्वाननेकसमयस्थजनानुयायी ।
किन्तु ज्वरादिपरिपीडितमूर्त्तिरूपो
दृद्धाङ्गनारतिरपास्तनिजप्रदेशः ॥ १४ ॥

अन्तर्दशां दिनकरस्य शशी प्रपन्नः
कुर्यात् कलत्रविभवं विपुलं यशश्च ।
विन्मित्रतारुधिरवातकफप्रकोपं
प्रस्थानखेदमनुरूपधनादि लाभम् ॥ १५ ॥

प्रभाकृतोऽन्तर्ज्जुशिभार्गवेतु
रुणःशिरःकुक्षिषु खिन्नबुद्धिः ।
पराजितः स्यात् कलहे निजार्थं
हीनश्च किञ्चिद्वनिताव मित्रम् ॥१६॥

जीवे सहस्रकिरणस्य दशामुपेते
राज्ञःप्रसान्तिरुपभुक्तिरनेकधा च ।
ऊर्व्वोर्व्यथा च सचिवैरर्थ मित्रता च

१ दशा २ काष्टा । ३ ऊर्द्वोर्व्यथा । ४ मित्रनाम ।

भङ्गं विरुद्धवनिताभिरकीर्त्तिराशिम् ।
पार्श्वोद्भवं व्यसनमूर्जितकुक्षिरोगं
शोकोदयञ्च विरहं स्वजनैः क्षणेन ॥ ३ ॥
प्रालेयरश्मिसमये सुरपूजितोऽयं
स्वस्त्रीसहायतनयोद्भवभीतिजातम् ।
स्थानापयानमवबुद्धिमनर्थजालं
प्राणाक्षयव्यसनमप्यपनेतुमिष्टे ॥ ४ ॥
सौम्यः करोति जनकस्य दशासु हर्षं
द्रव्योद्भवञ्च वपुषो गुरु गौरवञ्च ।
विद्भिर्विवादमपकृद्विजयीच तत्र
बन्धुक्षयञ्च विषये च विषादजालम् ॥ ५ ॥
भौमः करोति शशलाञ्छनकालयोगी
भोगोन्नतिञ्च कलहेन च तत्र हानिम् ।
रक्तश्रुतिञ्च सुतसम्मतवस्तुनाशं
खेदञ्च दासशिशुनीचजनोपनीतम् ॥ ६ ॥
मन्दो निशाकरदशोपगतः करोति
दैन्यञ्च भिक्षुजनसङ्गमनङ्गनार्त्तित्तम् ।
जालैश्च मित्रमपपापरताञ्च बुद्धिं
किञ्चिद्वसुद्भवमथा स्थिरताञ्च तस्य ॥ ७ ॥

इति चन्द्र दशा ।

---

शुक्रः स्वकालमुपगम्य महोदयञ्च
सन्मित्रलाभमरिनाशमभिष्टसिद्धिम् ।
मल्यानिमंशुकधनाभरणादिलाभं

---

१ प्रानम्यय ।

धर्म्मोद्‌भवश्च मधुरादिविशेषभुक्तिम् ॥ १ ॥
सौर्के दशामुपगतस्तरणीर्विपत्ति
पित्तात्मकेन तनुपित्तभवश्च रोगम् ।
द्रव्यस्य हानिमथमित्रजनेन भेद
मक्ष्णोः रुजश्च नृपविभयश्च धत्ते ॥ २ ॥
चन्द्रस्तु भार्गवदशामुपगम्य धत्ते
वस्तुत्रयं वपुषि कुष्टमनेकधा च ।
वैश्याविरोधमथनिर्गमनश्च देशात् .
मासादिकश्च रिपुभिः कफवातरोगम् ॥ ३ ॥
जीवः सितस्य समयं प्रतिपद्य सद्योऽ-
र्थं प्रमाष्टि गुरु गौरवमातनोति ।
नानामयेन परिपीडनमङ्गनाभि
र्वैरं ततो व्यसनमाशुपरं विधत्ते ॥ ४ ॥
चन्द्रोभृगोरुपगतः समयं प्रसिद्धं
धीमत्प्रसादसुपभोगमनेकधाच ।
क्लीवैश्च मैत्र्यमथमर्षणमांसलाभं
देहव्रणानि बहुलानि च सन्निधत्ते ॥ ५ ॥
कालं कुजो भृगुसुतस्य गतो विधत्ते
पुत्रोद्भवं शिशुजनेन सदा हि सन्धिम् ।
चापाल्यमिष्टविरहश्च विदेशयात्रां
तत्र स्थितिश्च बहुधामयपीडनञ्च ॥ ६ ॥
मन्दः सितेन सहितो बहुदासलाभं
सस्योद्भवश्च नवलोहमयश्च भाण्डम् ।
कुर्य्यान्मुहुःक्षपणकैश्च समागमश्च
द्वेषं बुधेन च जनेन चतुष्पदाप्तिम् ॥ ७ ॥

---

१ मातनोति । २ क्लीबैस्वमैत्र्य । ३ मंशलाभं ।

इति शुक्रदशा ।

---

जीवःस्वदायमुपगम्य नृपप्रसादं
स्थानान्तरञ्च बहुवित्तसमागमञ्च ।
यानादिलाभमहितस्य जनस्य हानिं
रोगक्षयञ्च कफरोगसमुद्भवञ्च ॥ १ ॥
जैवीं दशामुपगतो दिनकृत्करोति
रोगक्षयं [१]रिपुभयञ्च महाप्रतापम् ।
मानं परिभ्रमणमुज्ज्वलमित्रयोगं
द्रव्यञ्च भूतमुदितं क्षयमाशु तस्य ॥ २ ॥
इन्दुः समेत्य गुरुणा गुरु गौरवञ्च
गौराङ्गनाजनसमागममिष्टलाभम् ।
क्षेत्रस्य हानिमलसप्रकृतिञ्च किञ्चिद्
सञ्चारणञ्च बहुशः कुरुते मुदञ्च ॥ ३ ॥
शुक्रः सुरस्य समयं प्रतिपद्य धत्ते
पित्तज्वरं जठररोगमनेकधा च ।
भूतेर्भयं विभवहानिमनर्थबुद्धिं
बुद्धिक्षयञ्च सह बन्धुजनेन वैरम् ॥ ४ ॥
कुर्य्याद्बुधः सुरगुरोः समयं प्रपन्नः
क्लेशञ्च पाशयमनञ्च महामयञ्च ।
स्थानच्युतिञ्च परिलुप्ति महीप्सितानां
शस्त्रव्रणञ्च मरणव्यसनावसानम् ॥ ५ ॥
भौमः सुरेन्द्रगुरुणा सहितो हितानि
सम्पत्तिमुत्तमगुणञ्च मुदं करोति ।

---

१ रिपुहानिञ्च ॥

शत्रुभ्रमातपगुणं सुतरामलक्ष्मीं
मर्मार्तिमूर्तिरिपवश्च शिरोरुजश्च ॥ ६ ॥
सौरिर्गुरुं समुपगम्य करोति रोगं
पीडां नराधिपमनुष्यकुलोद्भवैश्च ।
वाणिज्यगुह्यविषये विपदापकीर्त्तिं
मूर्च्छामणञ्च सहसा मरणञ्च तस्य ॥ ७ ॥

इति शौरिदशा ।

---

सौम्यः स्वकाल्यमुपगम्य सुखोपसेवां
सर्वस्य लाभमुपदर्शयते तस्य हानिम् ।
सौख्यं स्वबन्धुकलहस्मरणे जयश्च
मन्त्रौषधाध्ययनलाभविधिश्च धत्ते ॥ १ ॥
भानुः शशाङ्कतनयस्य दशां प्रपन्नः
[1]स्वास्थ्यं धियं प्रशमयोगरतिश्च भूयः ।
यात्रां महाधनकरीश्च कलत्रलाभं
किञ्चित् करोति जठरामयपीडनञ्च ॥ २ ॥
चन्द्रः स्वपुत्रसमये समयच्युतिश्च
तोयप्रपातपतनेन भयञ्च भूयः ।
अंशैकहानिमनुजीविजनोपघातं
[2]पत्नीविनाशविपदञ्च मुहुः करोति ॥ ३ ॥
सौम्येनसङ्गमुपेत्य सितः करोति
देवद्विजन्मयतिपूजनलोलचित्तम् ।
स्त्रीभ्यां स्वलाभमधिकं नयनामयञ्च
पुत्रेण केनचिदनर्थविधिञ्च भूयः ॥ ४ ॥

---

१ स्वास्थ्यन्धियः । २ पत्नी ।

जीवो बुधेन सह सङ्गतिमेत्य सत्त्व-
हानिं विभूतिविपदञ्च तदच्युतिञ्च ।
भार्य्याविषादमनिशं निशि सुप्तिहानिं
नानाभयञ्च कुरुते कुरुते रतिञ्च ॥ ५ ॥
भौमो बुधस्य समये विदधाति पुंसः
क्रूरैः समागममृनैः सुलभोपचारम् ।
सञ्चारणञ्च बहुशोभयमायुदेभ्यो
मौर्ख्यञ्च सौख्यविलयञ्च मुहुः करोति ॥ ६ ॥
षड्गुर्बुधेन सहितः कुरुते नरस्य
शस्त्राग्निभीतिमयदामजनोपयातम् ।
आर्त्तिं क्षुधाश्च वपुपःशनपामयञ्च
साश्विन्तितार्थविलयञ्च महोदरञ्च ॥ ७ ॥

इति बुधदशा ।

---

भौमः स्वकीयसमये ज्वरशस्त्रवह्नि-
दाहव्रणानि निपुणेन जनेन वैरम् ।
स्वस्थानभङ्गमरणव्यसनं विधत्ते
पितञ्च रक्तमपि कोपयति प्रमत्त ॥ १ ॥
सूर्य्यः कुजेन सह सङ्गमसाप्य कुर्य्या
द्राज्याञ्च पुत्रविभवञ्च महोदयञ्च ।
तेजः प्रतापमवनीशसमागमञ्च
मन्दाग्निताञ्च सरता जनितञ्च रोगम् ॥ २ ॥
सङ्गसमेत शशभृद्धरणीसुतेन
शास्त्राङ्गनाजनसमागमदर्थलाभम् ।
पुत्रोद्भवञ्च विभवं यशसः सहाद्दि

सिद्धिश्च साधुसमयेषु महारतिश्च ॥ ३ ॥
अङ्गारकेन सहितो भृगुनन्दनोऽसौ
माध्यस्थ्यमावहति चेतसि सुस्थितिश्च ।
पीडालवश्च निजबन्धुजनेषु रोषं
शान्तिश्च शान्तमनुजेन समागमश्च ॥ ४ ॥
वक्रस्य कालमुपगम्य गुरुः करोति
सम्पत्तिमिष्टमनुजेषु महोदयश्च ।
सामन्तभूपसचिवैः सह मित्रताञ्च
दानादिधर्म्मनियताश्च मतिं करोति ॥ ५ ॥
प्राप्तो दशां शशिसुतः खलु लोहितस्य
व्यालेभवन्यमृगशङ्करजं भयञ्च ।
विद्वद्विरोधमुदरामयपीड़नश्च
वित्तक्षयश्च विदधाति चिराय पुंसः ॥ ६ ॥
भौमस्य कालमुपगम्य शनैश्चरोऽसौ
योगं तपस्विमनुजैः कुरुते क्षणेन ।
द्यूतादिदेवनाविधिश्च मुहुर्मुदश्च
सौन्दर्य्यहानिमपि पादगतश्च रोगम् ॥ ७ ॥

इति कुजदशा ॥



मन्दो निजं समयमेत्य करोति सद्यः
पीड़ां द्विजन्मनृपमित्रसमुद्भवाश्च ।
व्याधिं सुतार्थविलयञ्च पदावभङ्गं
निःशंसयं प्रकृतिदासजनारिभीतिम् ॥ १ ॥
भानुः शनैश्चरदशां प्रतिपद्य धत्ते
चोराद्भयं व्यसनमिष्टजनस्य शोकम् ।

अर्थापहारमनयादपमृत्युमुग्रं
स्त्रीभिर्विरोधमपयानमथ स्वदेशात् ॥ २ ॥
चन्द्रःमपथ रविपुत्रदशां करोति
कुष्टामयं मरणपीतिमनल्पशोकम् ।
दैन्यं भुजङ्गभयमुग्रमनर्थजालं
शास्त्रार्थविप्लवमनीतिपथावगाहम् ॥ ३ ॥
शुक्रो दिवाकरसुतस्य दशां मपन्नः
सन्नीतिलाभमभयञ्च चतुष्पदाप्तिम् ।
दासौपबृंहणमनेकजनोपचार
माचारहानिमपि तत्र करोति किञ्चित् ॥ ४ ॥
जीवः समेत्य समयं खररश्मिसूनो
श्चिन्ताकुलश्च हृदयं सदयामवस्थम् ।
स्वस्थानमात्रनिलयश्च लयश्च किञ्चित्
संचिन्तितस्य च विशेषमसौ विधत्ते ॥ ५ ॥
मन्दस्य कालमुपगम्य शशाङ्कपुत्रः
शास्त्रोदयञ्च बहुधान्यविशेषलाभम्
निसोत्सवञ्च विविधममदोपयोग
योगञ्च वन्यमनुजैः सहसा विधत्ते ॥ ६ ॥
स्यात्सूनुरर्कतनस्य दशासु धत्ते
मत्तप्रमत्तहृदयं दयिताभिशापम् ।
कोपं निरर्थकमनर्थकरीञ्च वाचं
बुद्धिं विपाचिमरुगुद्भवरोगजातम् ॥ ७ ॥

इति शनिदशा ॥



१ दासोपबृंहणं ॥ २ अनोमवार ॥

अनुलोमदशाभेदमेवं विद्याद्विचक्षणः ।
प्रतिलोमदशाभेदः संक्षेपात्कीर्त्यते ऽधुना ॥ १ ॥
दिवाजातस्य विज्ञेया भास्वतः प्रथमा दशा ।
निशाजस्य[1]दशां चन्द्रोरन्ते लग्नदशा भवेत् ॥ २ ॥
ततः परं दशाभेदं तत् कालबलिनां क्रमात् ।
[2]उभयत्रापि च होरायां फलं तत्पतिसन्निभम् ॥ ३ ॥
दशाग्रहाणां तत्कालमित्रोदासीनविद्विषाम् ।
श्रेष्ठा मध्याश्च कष्टाश्च क्रमेण परिकीर्त्तिताः ॥ ४ ॥
स्वक्षेत्रोच्चांशभाजाञ्च मित्रराशिजुषामपि ।
स्वोच्चाभिलाषिणाञ्चापि दशाः श्रेष्ठा नचापरः ॥ ५ ॥
अनुलोमदशातुल्यमितरं सर्व्वमिष्यते ।
आयुर्दायविधानेषु सावनं मानमाचरेत् ॥ ६ ॥
दशारम्भे शशी श्रेष्टः सुहृद्वर्गगतोऽपि वा ।
निजवर्गगतोवापि स्वोच्चसेवितसत्तमः ॥ ७ ॥
योगे ऽधिमित्रयोरिष्टं पूर्णमसन्ततोऽन्यथा ।
योगेऽधिद्वेषिणोः पापं पूर्णमसन्ततोऽन्यथा ॥ ८ ॥
इति दशाविपाकादेशोनामत्रयोदशोऽध्यायः ।

## चतुर्दशोऽध्यायः ।

अतः परं प्रवक्ष्यामि ग्रहगोचरपूर्व्वकम् ।
विधिमिष्टकवर्गस्य वराहमिहिरोदितम् ॥ १ ॥
शीतांशुर्म्मृष्टमन्नं जनयति विचरज्जन्मिनां जन्मराशौ
हर्षं [3]दैत्येयमन्त्री दिवसकरकुजौ शत्रुपक्षस्य वृद्धिम् ।

१ निशाजातस्य ॥ २ उभयत्रापि ॥ ३ दैत्येन्द्र ॥

हानिं कुर्य्यादसूनां किरणपतिसुतो वञ्चनं सोमपुत्रः
नित्यं निर्धूनबुद्धिं प्रबलरिपुभयं वितनाशश्च जीवः ॥२॥
भेदं मित्रजनैः करोति दिनकृत् क्लेशामयं चन्द्रमाः
सौरिर्वित्तविनाशकृद्धनकरस्तारापतेरात्मजः ।
हानिं भूमिसुतः करोति महतीं वृद्धिं भृगोरात्मजो
ज्ञानं दीपयति द्वितीयभवने जीवो नृणां निर्वृतिम् ॥ ३ ॥
स्थिता भ्रातृस्थाने दिनकरमहीजार्कतनयाः
स्थिरां स्थानप्राप्तिं दधाति धनलाभञ्च परमम् ।
विनाशं शत्रूणां जनयति शशी शुक्रसहितः
परं हृत्सन्तापं सुरगुरुबुधावापि कुरुतः ॥ ४ ॥
भूयः शास्त्रविबोधितामपि धियं मूढीकरोत्यङ्गिरा
घोरां दुःखपरम्परां दिनकरः कुर्य्यामयं चन्द्रमाः ।
लाभं सोमसुतः करोति भृगुजो नित्यं श्रिया सङ्गमं
भौमः शत्रुकरश्चतुर्थभवने सौरिश्च वित्तक्षयम् ॥ ४ ॥
वित्तं सूर्यसुत सुतोविमतुलं कामक्षति चन्द्रमाः ।
दोषोत्पत्तिमनेकशः क्षितिसुतः मायोवियोगं रविः ।
सौभाग्यं विदधाति सोमतनयः पुष्टिं परां भार्गवः
कुर्य्यात्पंचमराशिगः सुरगुरुर्नित्यं नृणां निर्वृतिम् ॥ ६ ॥
स्थिताः षष्ठे राशौ दिनकरमहीजार्कतनयाः
बुधश्चन्द्रश्चैवं प्रचुरधनलाभं विदधति ।
समृद्धिं शत्रूणां मनसि च विषादं गुरुभृगू
नराणां कुर्व्वन्तो युवतिकृतवैरञ्च परमम् ॥ ७ ॥
अर्कः सन्तापमन्तर्ज्जनयति शशभृत् सौख्यमसन्तलाभं
भौमो रोगाग्निवृद्धिं विबुधपतिगुरुर्वस्तुलाभं विधत्ते ।

१ शशिशुक्रसहितः । २ विभियं च ॥

रविसुतशशिनौ गृहावसाने
शशितनयः फलदस्तु सर्वकालम् ॥ १४ ॥
यस्य गोचरफलं प्रमाणतस्तस्य वेधफलमिष्यते नवा ।
मायशो न बहुसम्मतं विदः स्थूलमार्गफलदो हि गोचरः॥१५॥
अष्टवर्गपरिशोधितो ग्रहः श्रेष्टतां समनुवर्त्तते यदा ।
रिष्फगोऽपि हितदःप्रशस्यते योऽष्टवर्गशुभदःसशोभनः॥१६॥
जन्मकाले ग्रहक्रान्तराशेरारभ्य कल्पयेत् ।
शुभस्थानेषु विन्दुश्च रेखास्तद्वितरेषु च ॥ १७ ॥
द्वयोरन्योन्यविश्लेषादुत्तमाधममध्यमान् ।
कल्पयेच्चारमार्गेण तत्तद्राशिषु खेचरान् ॥ १८ ॥
अर्कः स्वस्माच्च भौमाच्च मन्दाच्च विचरन् शुभः ।
प्रथमायसुहृन्मृत्यु–शैलाशाधर्म्मवस्तुषु ॥ १९ ॥
शुक्रात्कामारिरिःफेषु जीवाद्धयायारिधर्म्मसु ।
चन्द्रात्तग्राशारिलाभेषु विचरन् शुभदो रविः ॥ २० ॥
बुधादाशात्रिलाभारि व्ययधी धर्म्मगःशुभः ।
लग्नादाशात्रिलाभारि सुहृद्रिःफेषु शोभनः ॥ २१ ॥
स्वस्मादुपचयेष्विन्दुरेकश्च मदनेऽपि च ।
लग्नादुपचयेष्वारात् सुतधीधर्म्मवस्तुषु ॥ २२ ॥
रवेरस्ते च मृत्यौ च तथैवोपचयेषु च ।
शनेरुव्ययारिपुत्रेषु विचरन् शोभनःशशी ॥ २३ ॥
बुधात्मथमादिकशैलसुहृन्नाशायधीत्रिषु ।
जीवात्प्रथमकर्म्मादि धनलाभाष्टवन्धुषु ।
शुक्राद्धर्म्मसुहृत्पुत्रः सहजायादिकर्म्मसु ॥ २४ ॥
भौमः स्वस्मात्स्ववन्धाशानाशाय प्रथमादिषु ।

---

१ खेचरान् । २ तेषु । ३ कर्म्मसु ।

मातावुपचयेचार्कादिन्दोर्लग्नभित्रिशतृपु ॥ २५ ॥
लग्नात्प्रथमपुत्राय सहजद्वेषिकर्म्मसु ॥
मन्दात्प्रथमधर्म्मायं नाशबन्ध्वाद्रिकर्म्मसु ॥ २६ ॥
बुधाच्चायारिपुत्रेषु गुरोर्दिग्विद्ययामगः ।
शुक्राभिभनलाभाश्च सपत्नेषु चरन्न शुभः ॥ २७ ॥
बुधःस्वस्माद्व्ययायाज्ञा त्रिधीधर्म्माद्रिशतृपु ।
शुक्रात्त्रिधीसुहृद्धर्म्मनाशाय प्रथमेषु च ॥ २८ ॥
मन्दात्वंशतृव्ययाद्रिषु भौमान्मन्दवदिष्यते ।
लग्नाच्छतृस्वलाभाज्ञा प्रथमाष्टसुहृत्सु च ॥ २९ ॥
चन्द्राल्लभेवदोघूते जीवाद्रिष्फायमृत्युषु ।
षष्ठेपि च रवेर्व्यायधर्म्मशतृव्ययोपगः ॥ ३० ॥
जीवः स्वस्माद्विपत्पुत्रधर्म्मारिःफेतरः शुभः ।
भौमात्प्रथमनाशाद्रिष्वाज्ञालाभसुहृद्गतः ॥ ३१ ॥
सूर्य्याद्रिफारिवर्ज्जेषु लग्नात्सन्ताष्टमेतरः ।
भार्गवाच्छतृलाभाज्ञाधर्म्मपुत्रधनाश्रयः ॥ ३२ ॥
चन्द्राद्व्यायास्तधर्म्मस्वेष्वार्कोद्विर्धीव्ययत्रिषु ।
बुधात्प्रथमधर्म्माय सुहृत्स्वाज्ञासुतारिषु ॥ ३३ ॥
शुक्रःस्वस्माद्व्ययद्वेषी कामवर्ज्जेषु शोभनः ।
लग्नात्पट दिक्स्मरान्सान्यस्तथाचन्द्राद्व्ययं विना ॥३४॥
मन्दादिषुद्रिपट्सप्तव्ययवर्ज्जेषु शोभनः ।
सूर्य्यादष्टादिरिष्फेषु व्याज्ञायात्रिनवान्सगः ॥ ३५ ॥
बुधाद्धर्म्मारिधीलाभतृतीयेषु च शोभनः ।
भौमात्रिनवपट् षन्धुर्व्याभालाभेषु वृद्धिदः ॥ ३६ ॥

१ षष्ठाधोन । २ मृत्वारिषु । ३ व्ययविनाः । ४ द्वय ।
५ व्याज्ञापार्श्वेप्रणंनगुरोः ।

शनिः स्वसमाच्चिधीलाभसपत्रेषु प्रशस्यते ।
भौमाऽयपुंव्ययाशामुचन्द्रादायत्रिशत्रुषु ॥ ३७ ॥
शुक्रादायारिरिष्फेषु गुरोध्यायान्त्यशत्रुषु ।
सूर्य्याद् स्वनिधनायाशा प्रथमाचलबन्धुषु ॥ ३८ ॥
लग्नादूबन्ध्वायदिवशत्रुलाभधर्म्मेषु शोभनः ॥ ३९ ॥

मित्रक्षेत्रे स्वनिधनगृहे स्वत्रिकोणे स्वतुङ्गे
स्थास्नुःखेटःप्रदिशति फलं पादवृद्ध्या क्रमेण ।
शत्रुक्षेत्रेष्वशुभरफलं नीचगश्चार्कलुप्तः[1]
किञ्चिन्नेष्टं फलति हितता व्यसयात्पापपाकः ॥४०॥

इति अष्टकवर्गादेशोनाम चतुर्दशोऽध्यायः ।

---

## पंचदशोऽध्यायः ।

इदानीं जन्मनत्कालमाश्रित्यैर्विहगादिभिः ।
प्रकल्पिताः योगगुणाः प्रकाश्यन्ते समासतः ॥ १ ॥
अर्केतरैः शिशिरगो रणपान्त्यस्थै
र्वस्तुपगैश्च सुनफा शुभसंस्थितैश्च ।
योगो भवेद्दुरुधुरा रहितग्रहाभ्यां
केमद्रुमः प्रकथितो निपुणैरभाभ्याम् ॥ २ ॥
प्रभुःप्रख्यातकीर्तिश्च शीलवान् भव्यवेदवान् ।
विपयेनसुखी साधु रणपातामनामयः ॥ ३ ॥
स्वभुजार्कम्मणैश्वर्यं पार्थिवोवापितत् समः ।
सुनफायां भवेत्ख्यातो यशसा च धिया धनैः ॥ ४ ॥

---

१ नेष्टप्रदपादाशायाः । २ सवचुलरफवद ।

त्यागी भोगी सुखी श्रीमान् वाहनाढ्यश्च भूसवान् ।
भवेद्गुरुधुराजातो बहुवारम्भविषादवान् ॥ ५ ॥
केमद्रुमसमुद्भूतः प्रेष्यो धनविवर्जितः ।
बलात्मा मलिनो नीचो दुःखितश्च निरुद्यमः ॥ ६ ॥
योगकर्त्तरि भूपुत्रे तस्करः क्रोधविह्वलः ।
बुधे धनाढ्यो मतिमान् सूक्ष्मदृष्टिःकलासु च ॥ ७ ॥
जीवे गुणगणाधारः पूज्यते च नरेश्वरैः ।
भार्गवे सुखितोभूयः समृद्धिः सर्व्वसम्पदः ॥ ८ ॥
सौरौ तु पूज्यते श्रेष्ठो बहुभूसः समुद्यमः ।
मिश्रेषु मिश्रगुणवान् बलिनो वा गुणाधिकाः ॥ ९ ॥
सूर्य्याद्द्वितीयग्रहयुक्तसृक्षं वेशीतिविद्भिः कथितं पुराणैः ।
वाशीततो द्वादशभन्तयोस्तु सौम्यग्रहश्चेच्छुभमस्ति जन्तोः॥१०
रवौ चन्द्रादिसंयुक्ते यन्त्रशःपापलालसः ।
निपुणःक्रूरचेष्टश्च शत्रुहीनश्च धातुवित् ॥ ११ ॥
चद्रे भौमादिसंयुक्ते कूटवेदी प्रियंवदः ।
कुलाग्रो वस्तुलक्ष्मज्ञः पुनर्भूतनयःक्रमात् ॥ १२ ॥
भौमे सौम्यादिसंयुक्ते मल्लो रसाधिकारवान् ।
सक्तश्च परदारेषु कर्मण व्यसनान्वितः ॥ १३ ॥
सौम्ये जीवादिसंयुक्ते जातो भवति गेयवित् ।
महास्त्रवचनोपेतः क्रमेणवेन्द्रजालवित् ॥ १४ ॥
जीवे शुक्रादिसंयुक्ते महास्त्रगुणमण्डनः ।
अग्रकारो भवेत् कश्चित् पटकारोऽपि सम्मतः ॥ १५ ॥
असितेन सितेयुक्ते मुद्रवेशोऽपिवा भवेत् ।
नीविक्रीर्णधनोवापि विविधैरं पण्योदय ॥ १६ ॥

१ २ सत्कार । ३ सर्वसम्मतः । ४ विविधार्थं ।

चतुरादिभिरेकस्थैः प्रव्रज्याबलिनोभवेत् ।
बलिभिर्बहुभिर्भव्यः प्रथमातु बलीयसः ॥ १७ ॥
शोभनाश्चतुराद्यास्ते यदि स्युर्बलवर्जिताः ।
परैर्वा वीक्षितास्तत्र केवलादीक्षणार्चिताः ॥ १८ ॥
चाणप्रस्थः कपालीच शाक्य आजीवको यतिः ।
चरकोचेलको भानुप्रभृतीनां व्रताश्रयः ॥ १९ ॥
तत्तद्दशायांप्रव्रज्या दशान्ते च ततश्च्युतिः ।
अनन्यदृष्टैरजिते यावज्जीवं व्रताश्रयः ॥ २० ॥
योगकर्ता ग्रहस्तत्र रविलुप्तकरो यदि ।
भक्तिभावाजीवेज्जन्तु र्दीक्षितो न भवेत्तदा ॥ २१ ॥
चन्द्रस्याधिष्टितं क्षेत्रं वर्गाधीशै सुहृत्तमैः ।
यदि वीक्षेत धनवांस्तदाजातो भविष्यति ॥ २२ ॥
मध्यास्तैर्धनवत्कल्पः शुभैरुक्तगुणान्वितः
अशुभैःकिञ्चिदूनःस्यादेवंफलविनिश्चयः ॥ २३ ॥
षट्सप्ताष्टमगैरिन्दोरधियोगः शुभग्रहैः ।
तस्मिन् दीर्घायुषःशत्रुजेवश्चप्रमुखोत्तरः ॥ २४ ॥
शशाङ्को धनवान् लग्नादनीचो धनवान् भवेत् ।
शुभैरुपचयस्थानगतैर्वलसमन्वितैः ॥ २५ ॥

लग्नाच्छशाङ्कादथवा कलत्र-
पुत्रक्षयोःसत्पतियुक्तयोश्च ।
संदृष्टयोर्वापरमा विभूतिः
स्वस्थानमप्येवमुपन्ति केचित् ॥ २६ ॥

पितृमातृद्विषत्मित्रभ्रातस्त्रीभृत्यकाहिताः ।
दशमस्थंर्धनमाप्नोतिमिन्दुभ्यांविनादिभिः ॥ २७ ॥

---

१ बलीशितु बलेशितु । २ मुपयन्ति ।

उदयार्कशशाङ्कानां दशमाधिपनिश्रितः ।
योंशस्तदीशदृसैव धनमाप्तिं विनिर्दिशेत् ॥ २८ ॥
स्वर्णोर्णातृणभेषजादिभिं रिनेचन्द्रे कृशी स्त्रीजलै-
र्भौमे साहसशस्त्रधातुदहनैः सौम्ये कलाकौशलैः ।
जीवे विप्रबुधागमैर्भृगुसुते गोरवरौप्यादिभिः
सौरौ तु श्रमभारनीचकरणैरर्थोपलब्धिर्भवेत् ॥ २९ ॥
पुष्णन्ति भावान्मूर्त्तादीन् शुभास्तत्तत्समाश्रयाः ।
पापाभावेग्रहाःषष्ठे सौम्याः शत्रुनिवर्हिकाः ॥ ३० ॥
सर्व्वेऽपि द्वादशस्थाने व्ययवृद्धिं प्रकुर्व्वते ॥
अष्टमस्थाश्च कुर्व्वन्ति मृत्युवृद्धिं विहङ्गमाः ॥ ३१ ॥
मातुःसुखादिसञ्चिन्त्यं रिप्फेनच धनेन च ।
इन्दुना च पितुश्चिन्त्यं पञ्चमेन च भानुना ॥ ३२ ॥

अजे कुलीरे वृषभे च लग्ने
चन्द्रे स्थिते रूपधनैरुपेतः ।
कृष्णे च शेषोदयगे शशाङ्के
जडो दरीद्रो विकलाङ्गदृष्टिः ॥ ३३ ॥

भानौ मेषोदयंप्राप्ते भवेत्तैमिरिको नरः ।
सिंहलग्नगते तस्मिन्निशान्धः परिकीर्त्तितः ॥ ३४ ॥
अर्के कुलीरलग्नस्थे स्याच्च बुद्बुदलोचनः
अर्के शेषेषु लग्नेषु नष्टदृष्टिर्भवेन्नरः ॥ ३५ ॥
व्ययस्थानं गतश्चन्द्रो वामलोचननाशनः ।
द्वादशात्मा तु नम्रस्गो दक्षिणेक्षणनाशनः ॥ ३६ ॥
कुलतुल्यः कुलश्रेष्ठो बन्धुमान्यो धनान्वितः ।
भोगी नृपसमो राजा स्त्रर्गस्थैरेक़ादिभिः ॥ ३७ ॥

१ यांशस्तदीशा स्वैव । २ ... । ३ निर्दिशेत् ।

# विज्ञापनम् ।

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ।॥) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| ग्रन्थाः | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ४ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्ड १ ) | ४ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | |